संवरहेतुत्वादादावुद्दिष्टाया गुप्तेः स्वरूपप्रतिपत्त्यर्थमाह—

**सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥**

योगो व्याख्यातः कायवाङ्मनःकर्म योग इत्यत्र । तस्य स्वेच्छाप्रवृत्तिनिवर्तनं निग्रहः । विषयसुखाभिलाषार्थप्रवृत्तिनिषेधार्थं सम्यग्विशेषणम् ॥ तस्मात् सम्यग्विशेषणविशिष्टात् संक्लेशाप्रादुर्भावपरात्कायादियोगनिरोधे सति तन्निमित्तं कर्म नास्रवतीति संवरप्रसिद्धिरवगन्तव्या । सा त्रितयी कायगुप्तिर्वाग्गुप्तिर्मनोगुप्तिरिति ॥

तत्राशक्तस्य मुनेर्निरवद्यप्रवृत्तिख्यापनार्थमाह—

**ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥**

सम्यगित्यनुवर्तते तेनेर्यादयो विशेष्यन्ते । सम्यगीर्या सम्यग्भाषा सम्यगेषणा सम्यगादाननिक्षेपौ सम्यगुत्सर्ग इति । ता एताः पंच समितयो विदितजीवस्थानादिविधेर्मुनेः प्राणिपीडापरिहाराभ्युपाया वेदितव्याः ॥ तथाप्रवर्तमानस्यासंयमपरिणामनिमित्तकर्मास्रवाभावात्संवरो भवति ॥

तृतीयस्य संवरहेतोर्धर्मस्य भेदप्रतिपत्त्यर्थमाह—

**उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिञ्चन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥**

शरीरस्थितिहेतुमार्गणार्थं परकुलान्युपगच्छतो भिक्षोर्दुष्टजनाक्रोशप्रहसनावज्ञाताडनशरीरव्यापादनादीनां सन्निधाने कालुष्यानुत्पत्तिः क्षमा ॥ जात्यादिमदावेशादभिमानाभावो मार्दवं माननिर्हरणम् ॥

योगस्यावक्रता आर्जवम् ॥ प्रकर्षप्राप्तलोभान्निवृत्तिः शौचम् ॥ सत्सु प्रशस्तेषु जनेषु साधुवचनं सत्यमित्युच्यते ॥ समितिषु वर्तमानस्य प्राणीन्द्रियपरिहारस्संयमः ॥ कर्मक्षयार्थं तप्यत इति तपः। संयतस्य योग्यं ज्ञानादिदानं त्यागः ॥ उपात्तेष्वपि शरीरादिषु संस्कारापोहाय ममेदमित्यभिसन्धिनिवृत्तिराकिञ्चन्यम्। नास्ति किंचनास्याकिंचनः तस्य भावः कर्म वा आकिंचन्यम् ॥ अनुभूताङ्गनास्मरणकथाश्रवण-स्त्रीसंसक्तशयनासनादिवर्जनाद्ब्रह्मचर्यम् परिपूर्णमवतिष्ठते ॥ स्वतन्त्रवृत्तिनिवृत्त्यर्थो वा गुरुकुलावासो ब्रह्मचर्यम् ॥

आह क्रोधाद्यनुत्पत्तिः क्षमादिविशेषप्रत्यनीकालम्बनादित्युक्तं, तत्र कस्मात्क्षमादीनयमवलम्बते नान्यथा प्रवर्तत इत्युच्यते। यस्मात्तप्तायःपिण्डवत्क्षमादिपरिणतेनात्महितैषिणा कर्तव्याः—

**अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्वानुचिन्तनमनुप्रेक्षाः ॥ ७ ॥**

न किञ्चित्संसारे समुदितं ध्रुवमस्ति आत्मनो ज्ञानदर्शनोपयोगस्वभावादन्यदिति चिन्तनमनित्यतानुप्रेक्षा ॥

यथा—मृगशावस्यैकान्ते बलवता क्षुधितेनामिषैषिणा व्याघ्रेणाभिभूतस्य न किञ्चिच्छरणमस्ति—तथा जन्मजरामृत्युव्याधिप्रभृतिव्यसनमध्ये परिभ्रमतो जन्तोः शरणं न विद्यते ॥
चेत्सुचरितो धर्मो व्यसनमहार्णवे तारणोपायो भवति।
नीयमानस्य सहस्रनयनादयोऽपि न शरणम् ॥ त.

धर्म एव शरणं सुहृदर्थोऽप्यनपायी, नान्यत्किञ्च्छरणमिति भावना अशरणानुप्रेक्षा ॥

कर्मविपाकवशादात्मनो भवान्तरावाप्तिः संसारः। तस्मिन्ननेकयोनिकुलकोटिबहुशतसहस्रसंकटे संसारे परिभ्रमन् जीवः कर्मयन्त्रानुप्रेरितः पिता भूत्वा भ्राता पुत्रः पौत्रश्च भवति। माता भूत्वा भगिनी भार्या दुहिता च भवति। स्वामी भूत्वा दासो भवति। दासो भूत्वा स्वाम्यपि भवति नट इव रङ्गे॥ अथवा किं बहुना स्वयमात्मनः पुत्रो भवतीत्येवमादिसंसारस्वभावचिन्तनं संसारानुप्रेक्षा॥

जन्मजरामरणानुवृत्तिमहादुःखानुभवं प्रति एक एवाहं न कश्चिन्मे स्वः परो वा विद्यते। एक एव जायेऽहम्। एक एव म्रिये। न मे कश्चित् स्वजनः परजनो वा व्याधिजरामरणादीनि दुःखान्यपहरति। बन्धुमित्राणि श्मशानं नातिवर्तन्ते। धर्म एव मे सहायः सदा अनपायीति चिन्तनमेकत्वानुप्रेक्षा॥

शरीरादन्यत्वचिन्तनमन्यत्वानुप्रेक्षा। तद्यथा बन्धं प्रत्येकत्वे सत्यपि लक्षणभेदादन्योऽहमैन्द्रियकं शरीरमनिन्द्रियोऽहमज्ञं शरीरं ज्ञोऽहमनित्यं शरीरं नित्योऽहमाद्यन्तवच्छरीरमनाद्यन्तोऽहं बहूनि मे शरीरशतसहस्राण्यतीतानि संसारे परिभ्रमतः। स एवाहमन्यस्तेभ्य इत्येवं शरीरादप्यन्यत्वं मे किमङ्ग! पुनर्बाह्येभ्यः परिग्रहेभ्य इत्येवं ह्यस्य मनःसमादधानस्य शरीरादिषु स्पृहा नोत्पद्यते।

शरीरमिदमत्यन्ताशुचि, स्नानानुलेपनधूपप्रघर्षवासमाल्यादिभिरपि न शक्यमशुचित्वमपहर्तुमस्य। सम्यग्दर्शनादि पुनर्भाव्यमानं

जीवस्यात्यन्तिकीं शुद्धिमाविर्भावयतीति तत्त्वतो भावनमशुचित्वानुप्रेक्षा ॥

आस्रवा इहामुत्रापाययुक्ता महानदीस्रोतोवेगतीक्ष्णा इन्द्रियकषायाव्रतादय । तत्रेन्द्रियाणि तावत्स्पर्शनादीनि वनगजवायसपन्नगपतङ्गहरिणादीन् व्यसनार्णवमवगाहयन्ति तथा कषायादयोऽपीह वधबन्धपरिक्लेशादीन् जनयन्ति ॥ अमुत्र च नानागतिषु बहुविधदुःखप्रज्वलितासु भ्रमयन्तीत्येवमास्रवदोषानुचिन्तनमास्रवानुप्रेक्षा ॥

यथा महार्णवे नावो विवरापिधाने सति क्रमास्रुतजलाभिप्लवे सति तदाश्रयाणां विनाशोऽवश्यंभावी, छिद्रपिधाने च निरुपद्रवमभिलपितदेशान्तरप्रापणं, तथा कर्मागमद्वारसंवरणे सति नास्ति श्रेयःप्रतिबन्ध इति संवरगुणानुचिन्तनं संवरानुप्रेक्षा ॥

निर्जरा वेदनाविपाकजा इत्युक्तम् ॥ सा द्वेधा—अबुद्धिपूर्वा कुशलमूला चेति ॥ तत्र नरकादिषु गतिषु कर्मफलविपाकजा अबुद्धिपूर्वा सा अकुशलानुबन्धा ॥ परिषहजये कृते कुशलमूला सा शुभानुबन्धा निरनुबन्धा चेति ॥ इत्येवं निर्जराया गुणदोषभावनं निर्जरानुप्रेक्षा ।

समन्तादनन्तस्यालोकाकाशस्य बहुमध्यदेशभाविनो लोकस्य संस्थानादिविधिर्व्याख्यात ॥ तत्स्वभावानुचिन्तनं लोकानुप्रेक्षा ।

एकस्मिन्निगोतशरीरे जीवाः सिद्धानामनन्तगुणाः, एवं सर्वलोको निरन्तरं निचितः स्थावरैरतस्तत्र त्रसता वालुकासमुद्रे पतिता

वंज्रसिकताकणिकेव दुर्लभा । तत्र च विकलेन्द्रियाणां भूयिष्ठत्वात्पञ्चेन्द्रियता गुणेषु कृतज्ञतेव कृच्छ्रलभ्या । तत्र च तिर्यक्षु पशुमृगपक्षिसरीसृपादिषु बहुषु सत्सु मनुष्यभावश्चतुष्पथे रत्नराशिरिव दुरासदः । तत्प्रच्यवे च पुनस्तदुपपत्तिर्दग्धतरुपुद्गलतद्भावोपपत्तिवद्दुर्लभा । तल्लाभे च देशकुलेन्द्रियसम्पन्नीरोगत्वान्युत्तरोत्तरतोऽतिदुर्लभानि ॥ सर्वेष्वपि तेषु लब्धेषु सद्धर्मप्रतिलम्भो यदि न स्याद्व्यर्थं जन्म. वदनमिव दृष्टिविकलं । तमेवं कृच्छ्रलभ्यं धर्ममवाप्य विषयसुखे रञ्जन भस्मार्थं चन्दनदहनमिव विफलम् ॥ विरक्तविषयसुखस्य तु तपोभावनाधर्मप्रभावनासुखमरणादिलक्षणः समाधिर्दुरवाप । तस्मिन् सति बोधिलाभः फलवान् भवतीति चिन्तनं बोधिदुर्लभानुप्रेक्षा ॥

अथ जिनोपदिष्टो धर्मोऽहिंसालक्षणः सत्याधिष्ठितो विनयमूलः क्षमाबलो ब्रह्मचर्यगुप्त उपशमप्रधानो नियतिलक्षणो निष्परिग्रहतालम्बन । तस्यालाभादनादिसंसारे जीवा परिभ्रमन्ति दुष्कर्मविपाकजं दु.खमनुभवन्तः ॥ अस्य पुनः प्रतिलम्भे विविधाभ्युदयप्राप्तिपूर्विका नि श्रेयसोपलब्धिर्नियतेति चिन्तन धर्मस्वाख्यातत्वानुप्रेक्षा ।

एवमनित्यत्वाद्यनुप्रेक्षासन्निधाने उत्तमक्षमादिधारणान्महान्संवरो भवति ॥ मध्ये अनुप्रेक्षावचनमुभयार्थम् ॥ अनुप्रेक्षा हि भावयन्नुत्तमक्षमादींश्च प्रतिपालयति । परीषहांश्च जेतुमुत्सहते ॥

के पुनस्ते परिषहा. किमर्थं वा सह्यन्त इतीदमाह —

मार्गाच्यवननिर्जरार्थं परिषोढव्याः परिषहाः ॥ ८ ॥

संवरस्य प्रकृतत्वात्तेन मार्गो विशिष्यते । संवरमार्ग इति ॥ तदच्यवनार्थं निर्जरार्थं च परिषोढव्या परिषहाः । क्षुत्पिपासादिसहनम् । जिनोपदिष्टान्मार्गादप्रच्यवमानास्तन्मार्गपरिक्रमणपरिचयेन कर्मागमद्वारं संवृण्वन्त औपक्रमिकं कर्मफलमनुभवन्तः क्रमेण निर्जीर्णकर्माणो मोक्षमाप्नुवन्ति ॥

तत्स्वरूपसंख्यासम्प्रतिपत्यर्थमाह—

**क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥**

क्षुदादयो वेदनाविशेषा द्वाविंशतिः । एतेषां सहनं मोक्षार्थिना कर्तव्यम् ॥

आह किमिमे परिषहाः सर्वे संसारमहाटवीमतिक्रमितुमभ्युद्यतमभिद्रवन्ति उत कश्चित्प्रतिविशेष इत्यत्रोच्यते—अभीव्याख्यातलक्षणाः क्षुदादयश्चारित्रान्तराणि प्रतिभाज्या नियमेन पुनरनयोः प्रत्येतव्याः—

**सूक्ष्मसाम्परायछद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥**

क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधालाभरोगतृणस्पर्शमलप्रज्ञाज्ञानानि । चतुर्दश इति वचनादन्येषां परिषहाणामभावो वेदितव्यः ॥ तत्र हि केवललोभसञ्ज्वलनकषायोदयः सोऽप्यतिसूक्ष्मः ।

—आह यदि शरीरवत्यात्मनि परिषहसन्निधानं प्रतिज्ञायते अथ भगवति उत्पन्नकेवलज्ञाने कर्मचतुष्टयफलानुभवनवशवर्तिनि कियन्त उपनिपतन्तीत्यत्रोच्यते तस्मिन्पुनः—

एकादश जिने ॥ ११ ॥

निरस्तघातिकर्मचतुष्टये जिने वेदनीयसद्भावात्तदाश्रया एकादशपरिषहा सन्ति ॥ ननु मोहनीयोदयसहायाभावात्क्षुदादिवेदनाभावे परिषहव्यपदेशो न युक्तः । सत्यमेवमेतत्—वेदनाभावेऽपि द्रव्यकर्मसद्भावापेक्षया परिषहोपचारः क्रियते ।

आह यदि सूक्ष्मसाम्परायादिषु व्यस्ता परिषहा अथ समस्ताः क्वेति—

बादरसाम्पराये सर्वे ॥ १२ ॥

साम्परायः कषायः बादरः साम्परायो यस्य स बादरसाम्पराय इति ॥ नेदं गुणस्थानविशेषग्रहणम् । किं तर्हि अर्थनिर्देशः ॥ तेन प्रमत्तादीनां संयतानां ग्रहणं ॥ तेषु हि अक्षीणकषायदोषत्वात्सर्वे सम्भवन्ति ॥ कस्मिन् पुनश्चारित्रे सर्वेषां सम्भवः ? । सामायिकच्छेदोपस्थापनपरिहारविशुद्धिसंयमेष्वन्यतमे सर्वेषा सम्भवः ॥

आह गृहीतमेतत्परिषहाणा स्थानविशेषावधारणं, इदं तु न विद्मः कस्या प्रकृतेः क कार्य इत्यत्रोच्यते—

ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

इदमयुक्तं वर्तते । किमत्रायुक्तं—ज्ञानावरणे सत्यज्ञानपरिषह उपपद्यते, प्रज्ञापरिषहः पुनस्तदपाये भवतीति कथ ज्ञानावरणे

स्यादित्यत्रोच्यते–क्षायोपशमिकी प्रज्ञा अन्यस्मिन् ज्ञानावरणे सति मदं जनयति। न सकलावरणक्षये इति ज्ञानावरणे सतीत्युपपद्यते॥

पुनरपरयोः परिषहयोः प्रकृतिविशेषनिर्देशार्थमाह—

दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥

यथासंख्यमभिसम्बन्धः। दर्शनमोहे अदर्शनपरिषहः लाभान्तराये अलाभपरिषह इति॥

आह यद्यादौ मोहनीयभेदे एकः परिषहः, अथ द्वितीयस्मिन् कति भवन्तीत्यत्रोच्यते–

चरित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कार-
पुरस्काराः ॥ १ ॥

पुंवेदोदयादिनिमित्तत्वान्नाग्न्यादिपरिषहाणां मोहोदयनिमित्तत्वं प्रतिपद्यामहे। निषद्यापरिषहस्य कथम्? तत्रापि प्राणिपीडापरिहारार्थत्वात्। मोहोदये सति प्राणिपीडापरिणामः सञ्जायत इति॥

अवशिष्टपरिषहप्रकृतिविशेषप्रतिपादनार्थमाह–

वेदनीये शेषाः ॥ १६ ॥

उक्ता एकादश परिषहाः। तेभ्योऽन्ये शेषा वेदनीये सति भवन्तीति वाक्यशेषः॥ के पुनस्ते? क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरिषहाः॥

आह व्याख्यातनिमित्तलक्षणविकल्पाः प्रत्यात्मनि प्रादुर्भवन्तः कति युगपदवतिष्ठन्त इत्यत्रोच्यते—

**एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतेः ॥ १७ ॥**

आङभिविध्यर्थं तेन एकोनविंशतिरपि कचित् युगपत्सम्भवतीत्यवगम्यते । तत्कथमिति चेदुच्यते—शीतोष्णपरिषहयोरेकः शय्यानिपद्याचर्याणामन्यतम एव भवति एकस्मिन्नात्मनि ॥ कुत. ? विरोधात् ॥ ततस्त्रयाणमपगमे युगपदेकात्मनीतरेषा सम्भवादेकोनविंशतिविकल्पा बोद्धव्या. ॥ ननु प्रज्ञाज्ञानयोरपि विरोधाद्युगपदसम्भव. ? । श्रुतज्ञानापेक्षया प्रज्ञापरिषहः अवधिज्ञानापेक्षया अज्ञानपरिषह इति नास्ति विरोध. ॥

आह उक्ता गुप्तिसमितिधर्मानुप्रेक्षापरिषहजया. सवरहेतव पञ्च । सवरहेतुश्चारित्रसञ्ज्ञो वक्तव्य इति तद्भेदप्रदर्शनार्थमुच्यते—

**सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसाम्पराययथाख्यातमिति चारित्रम् ॥ १८ ॥**

अत्र चोद्यते—दशविधे धर्मे संयम उक्त स एव चारित्रमिति पुनर्ग्रहणमनर्थकमिति ॥ नानर्थकम् धर्मेऽन्तर्भूतमपि चारित्रमन्ते गृह्यते मोक्षप्राप्ते. साक्षात्कारणमिति ज्ञापनार्थम् ॥ सामायिकमुक्तं । क्व ? दिग्देशानर्थदण्डविरतिसामायिकमित्यत्र ॥ तद्द्विविधम्—नियतकालमनियतकालञ्च । स्वाध्यायादि नियतकालम् । ईर्यापथाद्यनियतकालम् ॥ प्रमादकृतानर्थप्रबन्धविलोपे सम्यक्प्रतिक्रिया छेदोपस्थापना, विकल्पनिवृत्तिर्वा ॥ परिहरणं परिहारः प्राणिवधान्निवृत्ति. ।

तेन विशिष्टा शुद्धिर्यस्मिंस्तत्परिहारविशुद्धिचारित्रम् ॥ अतिसूक्ष्मकषायत्वात्सूक्ष्मसाम्परायचारित्रम् ॥ मोहनीयस्य निरवशेषस्योपशमात्क्षयाच्च आत्मस्वभावावस्थोपेक्षालक्षणं यथाख्यातचारित्रमित्याख्यायते ॥ पूर्वचारित्रानुष्ठायिभिराख्यातं न तत्प्राप्तं प्राङ्मोहक्षयोपशमाभ्यामित्यथाख्यातम् ॥ अथशब्दस्यानन्तरार्थवर्तित्वान्निरवशेषमोहक्षयोपशमानन्तरमाविर्भवतीत्यर्थः ॥ तथाऽऽख्यातमिति वा यथात्मस्वभावोऽवस्थितस्तथैवाख्यातत्वात् ॥ इतिशब्दः परिसमाप्तौ द्रष्टव्यः ॥ ततो यथाख्यातचारित्रात्सकलकर्मक्षयपरिसमाप्तिर्भवतीति ज्ञाप्यते ॥ सामायिकादीनामानुपूर्व्यवचनमुत्तरोत्तरगुणप्रकर्षज्ञापनार्थम् ॥

आह उक्तं चारित्रं तदनन्तरमुद्दिष्टं यत् तपसा निर्जरा चेति तस्येदानीं तपसो विधानं कर्तव्यमित्यत्रोच्यते तत् द्विविधम् बाह्यमभ्यन्तरं च ॥ तत्प्रत्येकं षड्विधम् ॥ तत्र बाह्यभेदप्रतिपत्त्यर्थमाह—

**अनशनावमौदर्यवृत्तिपरिसङ्ख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥**

दृष्टफलानपेक्षं संयमप्रसिद्धिरागोच्छेदकर्मविनाशध्यानागमावाप्त्यर्थमनशनम् ॥ संयमप्रजागरदोषप्रशमसन्तोषस्वाध्यायादिसुखसिद्ध्यर्थमवमौदर्यम् ॥ भिक्षार्थिनो मुनेरेकागारादिविषयसङ्कल्पचित्तावरोधो वृत्तिपरिसंख्यानमाशानिवृत्त्यर्थमवगन्तव्यम् ॥ इन्द्रियदर्पनिग्रहनिद्राविजयस्वाध्यायसुखसिद्ध्यर्थो घृतादिवृष्यरसपरित्यागश्चतुर्थं तपः ॥ शून्यागारादिषु विविक्तेषु जन्तुपीडाविरहितेषु संयतस्य शय्यासनमाबाधात्ययब्रह्मचर्यस्वाध्यायध्यानादिप्रसिद्ध्यर्थं कर्तव्यमिति

पञ्चमं तपः ॥ आतपस्थानं वृक्षमूलनिवासो निरावरणशयनं बहुविधप्रतिमास्थानमित्येवमादिः कायक्लेशः षष्ठं तपः ॥ तत्किमर्थम् ? देहदुःखतितिक्षासुखानभिष्वङ्गप्रवचनप्रभावनाद्यर्थम् ॥ परिषहस्यास्य च को विशेषः—यदृच्छयोपनिपतितः परिषहः । स्वयंकृतः कायक्लेशः ॥ बाह्यत्वमस्य कुतः-बाह्यद्रव्यापेक्षत्वात्परप्रत्यक्षत्वाच्च बाह्यत्वम् ॥ अभ्यन्तरतपोभेदप्रदर्शनार्थमाह—

प्रायश्चित्तविनयवैयावृत्यस्वाध्यायव्युत्सर्गध्या-
नान्युत्तरम् ॥ २० ॥

कथमस्याभ्यन्तरत्वम् । मनोनियमनार्थत्वात् ॥ प्रमाददोषपरिहारः प्रायश्चित्तम् ॥ पूज्येष्वादरो विनयः ॥ कायचेष्टया द्रव्यान्तरेण चोपासनं वैयावृत्त्यम् ॥ ज्ञानभावनाऽऽलस्यत्यागः स्वाध्यायः ॥ आत्माऽऽत्मीयसङ्कल्पत्यागो व्युत्सर्गः ॥ चित्तविक्षेपत्यागो ध्यानम् ॥ तद्भेदप्रतिपादनार्थमाह—

नवचतुर्दशपञ्चद्विभेदा यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥

यथाक्रममिति वचनान्नवभेदं प्रायश्चित्तम् ॥ विनयश्चतुर्विधः वैयावृत्यं दशविधम् ॥ स्वाध्यायः पञ्चविधः ॥ द्विविधो व्युत्सर्गः इत्यभिसम्बध्यते ॥ प्राग्ध्यानादितिवचनं ध्यानस्य बहुवक्तव्यत्वात्पश्चाद्वक्ष्यत इति ॥ आद्यस्य भेदस्वरूपनिर्ज्ञानार्थमाह—

आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेद-
दपरिहारोपस्थापनाः ॥ २२ ॥

तत्र गुरवे प्रमादनिवेदनं दशदोषविवर्जितमालोचनम् ॥ मिथ्यादुष्कृताभिधानादभिव्यक्तप्रतिक्रियं प्रतिक्रमणम् ॥ संसर्गे सति विशोधनात्तदुभयम् ॥ संसक्तान्नपानोपकरणादिविभजनं विवेकः ॥ कायोत्सर्गादिकरणं व्युत्सर्गः ॥ अनशनावमोदर्यादिलक्षणं तपः ॥ दिवसपक्षमासादीनां प्रव्रज्याहापनं छेदः ॥ पक्षमासादिविभागेन दूरतः परिवर्जनं परिहारः ॥ पुनर्दीक्षाप्रापणमुपस्थापना ॥

विनयविकल्पप्रतिपत्त्यर्थमाह—

ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥

विनय इत्यधिकारेणाभिसम्बन्धः क्रियते ॥ ज्ञानविनयो दर्शनविनयश्चारित्रविनय उपचारविनयश्चेति ॥ सबहुमानं मोक्षार्थं ज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः शङ्कादिदोषविरतं तत्त्वार्थश्रद्धानं दर्शनविनयः । तद्वतश्चारित्रसमाहितचित्तता चारित्रविनयः । प्रत्यक्षेष्वाचार्यादिष्वभ्युत्थानाभिगमनाञ्जलिकरणादिरुपचारविनयः, परोक्षेष्वपि कायवाङ्मनोऽभिरञ्जलिक्रिया गुणसङ्कीर्तनानुस्मरणादिः ॥

वैयावृत्त्यभेदप्रतिपादनार्थमाह—

आचार्योपाध्यायतपस्विशैक्षग्लानगणकुलसङ्घसाधुमनोज्ञानाम् ॥ २४ ॥

वैयावृत्त्यं दशधा भिद्यते । कुतः । विषयभेदात् ॥ आचार्यवैयावृत्त्यमुपाध्यायवैयावृत्त्यमित्यादि ॥ तत्र आचरन्ति तस्माद्व्रतानीत्याचार्यः । मोक्षार्थं शास्त्रमुपेत्य तस्मादधीयत इत्युपाध्यायः । महोपवा-

साद्यनुष्ठायी तपस्वी ॥ शिक्षाशील. शैक्षः ॥ रुजादिक्लिष्टशरीरो ग्लानः ॥ गणः स्थविरसन्तति ॥ दीक्षकाचार्यशिष्यसन्ततयः कुलम् । चातुर्वर्ण्यश्रमणनिवहः सङ्घः ॥ चिरप्रव्रजितः साधुः ॥ मनोज्ञो लोकसम्मतः ॥ तेषा व्याधिपरिषहमिथ्यात्वाद्युपनिपाते कायचेष्टया द्रव्यान्तरेण वा तत्प्रतिकारो वैयावृत्त्यं समाध्याध्यानविचिकित्साभावप्रवचनवात्सल्याद्यभिव्यक्त्यर्थं ॥

स्वाध्यायविकल्पविज्ञापनार्थमाह—

वाचनाप्रच्छनाऽनुप्रेक्षाऽऽम्नायधर्मोपदेशाः ॥ २५ ॥

निरवद्यग्रन्थार्थोभयप्रदानं वाचना । संशयच्छेदाय निश्चितबलाधानाय वा परानुयोगः प्रच्छना । अधिगतार्थस्य मनसाऽऽभ्यासोऽनुप्रेक्षा । घोषशुद्धं परिवर्तनमाम्नाय' ॥ धर्मकथाद्यनुष्ठानं धर्मोपदेश' । स एष पञ्चविध. स्वाध्याय. किमर्थः । ? प्रज्ञातिशय' प्रशस्ताध्यवसाय' परमसंवेगस्तपोवृद्धिरतिचारविशुद्धिरित्येवमाद्यर्थः ॥ व्युत्सर्गभेदनिर्ज्ञानार्थमाह—

बाह्याभ्यन्तरोपध्योः ॥ २६ ॥

व्युत्सर्जनं व्युत्सर्गस्त्याग. । स द्विविध.—बाह्योपधित्यागोऽभ्यन्तरोपधित्यागश्चेति ॥ अनुपात्त वास्तुधनधान्यादि बाह्योपधि' । क्रोधादिरात्मभावोऽभ्यन्तरोपधि. ॥ कायत्यागश्च नियतकालो यावज्जीवं वाऽभ्यन्तरोपधित्याग इत्युच्यते । स किमर्थ. ? निस्सङ्गत्वनिर्भयत्वजीविताशाव्युदासाद्यर्थ. ॥

यद्बहुवक्तव्यं ध्यानमिति पृथग्व्यवस्थापितं तस्येदानीं भेदाभिधानं प्राप्तकालं । तदुल्लंघ्य तस्य प्रयोक्तृस्वरूपकालनिर्द्धारणार्थमुच्यते—

**उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानमान्तमुर्हूर्तात् ॥२७॥**

आद्यं त्रितयं संहननमुत्तमं वज्रर्षभनाराचसंहननं वज्रनाराचसंहननं नाराचसंहननमिति ॥ तत्त्रितयमपि ध्यानस्य साधनं भवति ॥ मोक्षस्य तु आद्यमेव ॥ तदुत्तमसंहननं यस्य सोऽयमुत्तमसंहननस्तस्योत्तमसंहननस्येत्यनेन प्रयोक्तृनिर्देशः ॥ अग्रं मुखम् । एकमग्रमस्येत्येकाग्र' (ग्रं)। नानार्थावलम्बनेन चिन्ता परिस्पन्दवती, तस्या अन्याशेषमुखेभ्यो व्यावर्त्य एकस्मिन्नग्रे नियम एकाग्रचिन्तानिरोध इत्युच्यते। अनेन ध्यानस्वरूपमुक्तं भवति ॥ मुहूर्त इति कालपरिमाणम्। अन्तर्गतो मुहूर्तोऽन्तर्मुहूर्तः । आ अन्तर्मुहूर्तादित्यनेन कालावधिः कृतः ॥ ततः परं दुर्धरत्वादेकाग्रचिन्तायाः ॥ चिन्ताया निरोधो यदि ध्यानं निरोधश्चाभावस्तेन ध्यानमसत्खरविषाणवत्स्यात् ॥ नैष दोषः— अन्यचिन्तानिवृत्त्यपेक्षयाऽसदिति चोच्यते, स्वविषयाकारप्रवृत्तेः सदिति च । अभावस्य भावान्तरत्वाद्धेत्वङ्गत्वादिभिरभावस्य वस्तुधर्मत्वसिद्धेश्च ॥ अथवा, नायं भावसाधनः "निरोधनं निरोध इति" । किं तर्हि ? कर्मसाधनः "निरुध्यत इति निरोधः" ॥ चिन्ता चासौ निरोधश्च चिन्तानिरोध इति ॥ एतदुक्तं भवति—ज्ञानमेवापरिस्पन्दमानमपरिस्पन्दाग्निशिखावदवभासमानं ध्यानमिति ॥

तद्भेदप्रदर्शनार्थमाह—

**आर्त्तरौद्रधर्म्यशुक्लानि ॥ २८ ॥**

ऋतं दुःखं, अर्दनमर्तिर्वा, तत्र भवमार्तम्। रुद्रः क्रूराशयस्तस्य कर्म तत्र भवं वा रौद्रम्। धर्मो व्याख्यातो धर्मादनपेतं धर्म्यम्। शुचिगुणयोगाच्छुक्लम् ॥ तदेतच्चतुर्विधं ध्यानं द्वैविध्यमश्नुते। कुतः?। प्रशस्ताप्रशस्तभेदात् ॥ अप्रशस्तमपुण्यास्रवकारणत्वात्। कर्मनिर्दहनसामर्थ्यात्प्रशस्तम् ॥

किं पुनस्तदिति चेदुच्यते—

परे मोक्षहेतू ॥ २९ ॥

परमुत्तरमन्त्यं तत्सामीप्याद्धर्म्यमपि परमित्युपचर्यते। द्विवचनसामर्थ्याद्गौणमपि गृह्यते ॥ परे मोक्षहेतू इति वचनात्पूर्वे आर्तरौद्रे संसारहेतू इत्युक्तं भवति ॥ कुतः? तृतीयस्य साध्यस्याभावात् तत्रार्तं चतुर्विधम् ॥

तत्रादिविकल्पलक्षणनिर्देशार्थमाह—

आर्तममनोज्ञस्य सम्प्रयोगे तद्विप्रयोगाय
स्मृतिसमन्वाहारः ॥ ३० ॥

अमनोज्ञमप्रियं विषकण्टकशत्रुशस्त्रादि, तद्बाधाकारणत्वादमनोज्ञमित्युच्यते। तस्य सम्प्रयोग, स कथं नाम मे न स्यादिति सङ्कल्पश्चिन्ताप्रबन्धः स्मृतिसमन्वाहारः प्रथममार्तमित्याख्यायते ॥

द्वितीयस्य विकल्पस्य लक्षणनिर्देशार्थमाह—

विपरीतं मनोज्ञस्य ॥ ३१ ॥

कुतो विपरीतं ? पूर्वोक्तात् ।। तेनैतदुक्तं भवति—मनोज्ञस्येष्टस्य स्वपुत्रदारधनादेर्विप्रयोगे तत्सम्प्रयोगाय सङ्कल्पश्चिन्ताप्रबन्धो द्वितीयमार्तमवगन्तव्यम् ।।

तृतीयस्य विकल्पस्य लक्षणप्रतिपादनार्थमाह—

वेदनायाश्च ।। ३२ ।।

वेदनाशब्द सुखे दुःखे च वर्तमानोऽपि, आर्तस्य प्रकृतत्वात् दुःखवेदनाया प्रवर्तते, तस्या वातादिविकारजनितवेदनाया उपनिपाते तस्या अपायः कथं नाम मे स्यादिति वि (सं) कल्पश्चिन्ताप्रबन्धस्तृतीयमार्तमुच्यते ।।

तुरीयस्मार्तस्य लक्षणनिर्देशार्थमाह—

निदानं च ।। ३३ ।।

भोगाकाङ्क्षातुरस्यानागतविषयप्राप्तिं प्रति मनःप्रणिधानं सङ्कल्पश्चिन्ताप्रबन्धस्तुरीयमार्तं निदानमित्युच्यते ।।

तदेतच्चतुर्विधमार्तं किंस्वामिकमिति चेदुच्यते—

तदविरतदेशविरतप्रमत्तसंयतानाम् ।। ३४ ।।

अविरता असंयतसम्यग्दृष्ट्यन्ताः । देशविरताः संयतासंयताः । प्रमत्तसंयताः पञ्चदशप्रमादोपेताः क्रियानुष्ठायिनः ।। तत्राविरतदेशविरतानां चतुर्विधमार्तं भवति । असंयमपरिणामोपेतत्वात् ।। प्रमत्तसंयतानां तु निदानवर्ज्यमन्यदार्तत्रयं प्रमादोदयोद्रेकात्कदाचित्स्यात् ।।

व्याख्यातमार्तं सञ्ज्ञादिभि. ॥ द्वितीयस्य सञ्ज्ञाहेतुस्वामि निर्द्धारणार्थमाह—

**हिंसाऽनृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेश-विरतयोः ॥ ३५ ॥**

हिंसादीन्युक्तलक्षणानि, तानि रौद्रध्यानोत्पत्तेर्निमित्तीभवन्तीति हेतुनिर्देशो विज्ञायते । तेन हेतुनिर्देशेनानुवर्तमानः स्मृतिसमन्वाहारोऽभिसम्बध्यते । हिंसाया. स्मृतिसमन्वाहार इत्यादि ॥ तद्रौद्रध्यानमविरतदेशविरतयोर्वेदितव्यम् ॥ अविरतस्य भवतु रौद्रध्यानं देशविरतस्य कथम् ? । तस्यापि हिंसाद्यावेशाद्वित्तादिसंरक्षणतन्त्रत्वाच्चकदाचिद्भवितुमर्हति तत्पुनर्नारकादीनामकारणं सम्यग्दर्शनसामर्थ्यात्संयतस्य तु न भवत्येव । तदारम्भे संयमप्रच्युतेः ॥

आह परे मोक्षहेतू उपदिष्टे । तत्राद्यस्य मोक्षहेतोर्ध्यानस्य भेदस्वरूपस्वामिनिर्देश कर्तव्य इत्यत आह—

**आज्ञापायविपाकसंस्थानविचयाय धर्म्यम् ॥ ३६ ॥**

विचयन बिचयो विवेको विचारणमित्यर्थ. । आज्ञापायविपाकसंस्थानानां विचय आज्ञापायविपाकसंस्थानविचय । स्मृतिसमन्वाहार इत्यनुवर्तते, स प्रत्येकं सम्बध्यते—आज्ञाविचयाय स्मृतिसमन्वाहार इत्यादि ॥ तद्यथा—उपदेष्टुरभावान्मन्दबुद्धित्वात्कर्मोदयात्सूक्ष्मत्वाच्च पदार्थानां हेतुदृष्टान्तोपरमे सति सर्वज्ञप्रणीतमागमं प्रमाणीकृत्य इत्थमेवेद नान्यथागादिनो जिना इति गहनपदार्थश्रद्धा-

समर्थावधारणमाज्ञाविचय. । अथवा–स्वय विदितपदार्थतत्त्वस्य सतः परं प्रति पिपादयिषो. स्वसिद्धान्ताविरोधेन तत्त्वसमर्थनार्थं तर्कनय-प्रमाणयोजनपर. स्मृतिसमन्वाहार. सर्वज्ञाज्ञाप्रकाशनार्थत्वादाज्ञा-विचय इत्युच्यते ॥ जात्यन्धवन्मिथ्यादृष्टय. सर्वज्ञप्रणीतमार्गाद्विमुखा मोक्षार्थिन' सम्यङ्मार्गापरिज्ञानात्सुदूरमेवापयन्तीति सन्मार्गापायचि-न्तनमपायविचयः । अथवा–मिथ्यादर्शनज्ञानचारित्रेभ्य. कथं नाम इमे प्राणिनोऽपेयुरिति स्मृतिसमन्वाहारोऽपायविचयः ॥ कर्मणां ज्ञानावरणादीनां द्रव्यक्षेत्रकालभवभावप्रत्ययफलानुभवनं प्रति प्रणि-धानं विपाकविचय. ॥ लोकसंस्थानस्वभावविचयाय स्मृतिसमन्वाहार. संस्थानविचय' ॥ उत्तमक्षमादिलक्षणो धर्म उक्त । तस्मादनपेतं धर्म्यं ध्यानं चतुर्विकल्पमवसेयम ॥ तदविरतदेशविरतप्रमत्ताप्रमत्तसं-यताना भवति ॥

त्रयाणां ध्यानाना निरूपणं कृतम् । इदानीं शुक्लध्यानं निरू-पयितव्यम् । तद्वक्ष्यमाणचतुर्विकल्पम् ॥ तत्राद्ययोः स्वामिनिर्देशार्थ-मिदमुच्यते—

## शुक्ले चाद्ये पूर्वविदः ॥ ३७ ॥

वक्ष्यमाणेषु शुक्लध्यानविकल्पेषु आद्ये शुक्लध्याने पूर्वविदो भवत. श्रुतकेवलिन इत्यर्थः ॥ चशब्देन धर्म्यमपि समुच्चीयते ॥ तत्र व्याख्यानतो विशेषप्रतिपत्तिरिति श्रेण्यारोहणात्प्राग्धर्म्यं श्रेण्योः शुक्ले इति व्याख्यायते ॥

अवशिष्टे कस्य भवत इत्यत्रोच्यते—

## परे केवलिनः ॥ ३८ ॥

प्रक्षीणसकलज्ञानावरणस्य केवलिनः सयोगस्यायोगस्य च परे उत्तरे शुक्लध्याने भवत. ॥

यथासंख्य तद्विकल्पप्रतिपादनार्थमिदमुच्यते—

## पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रिया-निवर्तीनि ॥ ३९ ॥

पृथक्त्ववितर्कमेकत्ववितर्कं सूक्ष्मक्रियाप्रतिपाति व्युपरतक्रियानिवर्ति चेति चतुर्विधं शुक्लध्यान वक्ष्यमाणलक्षणमुपेत्य सर्वेषामन्वर्थमवसेयम् ॥ तस्यालम्बनविशेषनिर्धारणार्थमाह—

## त्र्येकयोगकाययोगायोगानाम् ॥ ४० ॥

योगशब्दो व्याख्यातार्थ' कायवाङ्मन. कर्म योग इत्यत्र ॥ उक्तैश्चतुर्भि. शुक्लध्यानविकल्पैस्त्रियोगादीना चतुर्णां यथासख्येनाभिसम्बन्धो वेदितव्य' ॥ त्रियोगस्य पृथक्त्ववितर्कं, त्रिषु योगेष्वेकयोगस्यैकत्ववितर्कं काययोगस्य सूक्ष्मक्रियाप्रतिपाति, अयोगस्य व्युपरतक्रियानिवर्तीति ॥ तत्राद्ययोर्विशेषप्रतिपत्त्यर्थमिदमुच्यते—

## एकाश्रये सवितर्कवीचारे पूर्वे ॥ ४१ ॥

एक आश्रयो ययोस्ते एकाश्रये । उभे अपि परिप्राप्तश्रुतज्ञाननिष्ठेनारंभ्येते इत्यर्थ । वीतर्कश्च वीचारश्च वीतर्कविचारौ, सह वीतर्कविचाराभ्यां वर्तेते इति सवितर्कविचारे ॥ पूर्वे पृथक्त्वैकत्ववितर्के इत्यर्थः ॥

तत्र यथासंख्यप्रसंगेऽनिष्टनिवृत्त्यर्थमिदमुच्यते—

अवीचारं द्वितीयम् ॥ ४२ ॥

पूर्वयोर्यत् द्वितीयं तदवीचारं प्रत्येतव्यम् ॥ एतदुक्तं भवति-आद्यं सवितर्कं सवीचारं च भवति द्वितीयं सवितर्कमवीचारं चेति ॥

अथ वितर्कवीचारयोः कः प्रतिविशेष इत्यत्रोच्यते—

वितर्कः श्रुतम् ॥ ४३ ॥

विशेषेण तर्कणमूहनं वितर्कः श्रुतज्ञानमित्यर्थः ॥

अथ को वीचारः ?

वीचारोऽर्थव्यञ्जनयोगसंक्रान्तिः ॥ ४४ ॥

अर्थो ध्येयः द्रव्यं पर्यायो वा । व्यञ्जनं वचनम् । योगः कायवाङ्मनःकर्मलक्षणः । संक्रान्तिः परिवर्तनम् ॥ द्रव्यं विहाय पर्यायमुपैति पर्यायं त्यक्त्वा द्रव्यमित्यर्थसंक्रान्तिः ॥ एकं श्रुतवचनमुपादाय वचनान्तरमालम्बते तदपि विहायान्यदिति व्यंजनसंक्रान्तिः ॥ काययोगं त्यक्त्वा योगान्तरं गृह्णाति योगान्तरं त्यक्त्वा काययोगमिति योगसंक्रान्तिः ॥ एवं परिवर्तनं वीचार इत्युच्यते ॥ संक्रान्तौ सत्यां कथं ध्यानमिति चेत्-ध्यानसन्तानमपि ध्यानमुच्यते इति न दोषः ॥

अत्राह सम्यग्दृष्टयः किं सर्वे समनिर्जरा आहोस्वित्कश्चिदस्ति प्रतिविशेष इत्यत्रोच्यते—

सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोप-

शमकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रम-
शोऽसंख्येयगुणनिर्जराः ॥ ४५ ॥

त एते दश सम्यग्दृष्ट्यादय क्रमशोऽसंख्येयगुणनिर्जरा ॥

आह सम्यग्दर्शनसन्निधानेऽपि यद्यसंख्येयगुणनिर्जरत्वात्परस्परतो न साम्यमेषां, किं तर्हि श्रावकवदमी विरतादयो गुणभेदान्न निर्ग्रन्थतामर्हन्तीत्युच्यते ॥ नैतदेवम् । कुत । यस्माद्गुणभेदादन्योऽन्यविशेषेऽपि नैगमादिनयव्यापारात्सर्वेऽपि हि भवन्ति—

पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः । ४६ ॥

त एते पञ्चापि निर्ग्रन्था ॥ चारित्रपरिणामस्य प्रकर्षाप्रकर्षभेदे सत्यपि नैगमसंग्रहादिनयापेक्षया सर्वेऽपि ते निर्ग्रन्था इत्युच्यन्ते ॥

तेषां पुलाकादीना भूयोऽपि विशेषप्रतिपत्त्यर्थमाह

संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपाद-
स्थानविकल्पतः साध्याः ॥ ४७ ॥

त एते पुलाकादय संयमादिभिरष्टभिरनुयोगै साध्या व्याख्येयाः ॥

॥ इति नवमोऽध्यायः ॥

## अथ दशमोऽध्यायः

आह—अन्ते निर्दिष्टस्य मोक्षस्येदानीं स्वरूपाभिधानं प्राप्तकालमिति । सत्यमेवं । मोक्षप्राप्ति केवलज्ञानावाप्तिपूर्विकेति केवल-

ज्ञानोत्पत्तिकारणमुच्यते—

मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्चकेवलम् ॥ १ ॥

क्षयक्रमप्रतिपादनार्थो वाक्यभेदेन निर्देश. क्रियते—प्रागेव मोह क्षयमुपनीयान्तमुहूर्तं क्षीणकपायव्यपदेशमवाप्य ततो युगपत् ज्ञानदर्शनावरणान्तरायाणा क्षय कृत्वा केवलमवाप्नोतीति ॥ तत्क्षयहेतु केवलोत्पत्तिरिति हेतुलक्षणो विभक्तिनिर्देश कृत. ॥

आह कस्माद्धेतोर्मोक्ष. किंलक्षणश्चेत्यत्रोच्यते—

बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥ २ ॥

मिथ्यादर्शनादिहेत्वभावादभिनवकर्माभाव. पूर्वोदितनिर्जराहेतुसन्निधाने चार्जितकर्मनिरास. । ताभ्या बन्धहेत्वभावनिर्जराभ्यामिति हेतुलक्षणविभक्तिनिर्देश. । ततो भवस्थितिहेतुसमीकृतशेपकर्मावस्थितस्य युगपदात्यन्तीकृतकृत्स्नकर्मविप्रमोक्षो मोक्षः प्रत्येतव्य. ॥

आह किमासां पौद्गलिकीनामेव द्रव्यकर्मप्रकृतीनां निरासान्मोक्षोऽवसीयते उत भावकर्मणोऽपीत्यत्रोच्यते—

'औपशमिकादिभव्यत्वानां च ॥ ३ ॥

किं, मोक्ष इत्यनुवर्तते । भव्यत्वग्रहणमन्यपारिणामिकनिवृत्त्यर्थम् ॥ तेन पारिणामिकेपु भव्यत्वस्यौपशमिकादीनां च भावानामभावान्मोक्षो भवतीत्यवगम्यते ॥

आह यद्यपवर्गो भावोपरते प्रतिज्ञायते नन्वौपशमिकादिभ

निवृत्तिवत्सर्वक्षायिकभावनिवृत्तावपि व्यपदेशो मुक्तस्य प्राप्नोतीति। स्यादेतदेवं, यदि विशेषो नोच्यते अस्त्यत्र विशेष इत्यपवादविधानार्थमिदमुच्यते—

अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥

अन्यत्रशब्दापेक्षया का निर्देश. केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यो अन्यत्रान्यस्मिन्नयं विधिरिति ॥ यदि चत्वार एवावशिष्यन्ते, अनन्तवीर्यादीनां निवृत्ति प्राप्नोति-नैष दोष'—ज्ञानदर्शनाविनाभावित्वादनन्तवीर्यादीनामविशेष. ।' अनन्तसामर्थ्यहीनस्यानन्तावबोधवृत्त्यभावाज्ज्ञानमयपर्यायत्वाच्च सुखस्येति ॥ अनाकारत्वान्मुक्तानामभाव इति चेन्न-अतीतानन्तरशरीराकारत्वात् ।

स्यान्मतं यदि शरीरानुविधायी जीव' तदभावात्स्वाभाविकलोकाकाशप्रदेशपरिमाणत्वात्तावद्विसर्पणं प्राप्नोतीतिनैष दोष' ॥ कुत'—कारणाभावात् ॥ नामकर्मसम्बन्धो हि संहरणविसर्पणकारण तदभावात्पुन. संहरणविसर्पणाभाव. ॥ यदि कारणाभावान्न सहरण न विसर्पण तर्हि गमनकारणाभावादूर्ध्वगमनमपि न प्राप्नोति । अधस्तिर्यग्गमनाभाववत् । ततो यत्र मुक्तस्तत्रैवावस्थानं प्राप्नोतीत्यत्रोच्यते—

तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥

तस्यानन्तरं । कस्य ? सर्वकर्मविप्रमोक्षस्य । आङभिविध्यर्थ' । ऊर्ध्वं गच्छत्यालोकान्तात् ॥

अनुपदिष्टहेतुकमिदमूर्ध्वगमनं कथमध्यवसातुं शक्यमित्यत्रोच्यते—.

पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथागतिपरिणामाच्च ।। ६ ।।

आह—हेत्वर्थः पुष्कलोऽपि दृष्टान्तसमर्थनमन्तरेणाभिप्रेतार्थ-साधनाय नालमित्यत्रोच्यते—

आविद्धकुलालचक्रवद्व्यपगतलेपालाबुवदेरण्डबीजवद-ग्निशिखावच्च ।। ७ ।।

पूर्वसूत्रे विहितानां हेतूनामत्रोक्तानां दृष्टान्तानां च यथासंख्य-मभिसम्बन्धो भवति । तद्यथा—कुलालप्रयोगापादितहस्तदण्डचक्रसं-योगपूर्वकं भ्रमणमुपरतेऽपि तस्मिन्पूर्वप्रयोगादासंस्कारक्षयाद् भ्रमति। एवं भवस्थेनात्मनाऽपवर्गप्राप्तये बहुशो यत्प्रणिधानं तदभावेऽपि तदावेशपूर्वकं मुक्तस्य गमनमवसीयते ।। किं च असङ्गत्वाद्यथा मृत्तिकालेपजनितगौरवमलाबुद्रव्यं जलेऽधःपतितं जलक्लेदविश्लि-ष्टमृत्तिकाबन्धनं लघुसदूर्ध्वमेव गच्छति । तथा कर्मभाराक्रान्तिव-शीकृत आत्मा तदावेशवशात्संसारे अनियमेन गच्छति । तत्सङ्गवि-प्रमुक्तौ तूपर्येवोपयाति । किं च बन्धच्छेदात्—यथा बीजकोशबन्ध-च्छेदादेरण्डबीजस्य गतिर्दृष्टा तथा मनुष्यादिभवप्रापकगतिजातिना-मादिसकलकर्मबन्धच्छेदान्मुक्तस्योर्ध्वं गतिरवसीयते ।। किं च तथागतिपरिणामात्—यथा तिर्यक्पवनस्वभावसमीरणसम्बन्धनिरु-त्सुका प्रदीपशिखा स्वभावादुत्पतति तथा मुक्तात्माऽपि नानागतिवि-कारकारणकर्मनिरावरणे सत्यूर्ध्वगतिस्वभावत्वादूर्ध्वमेवारोहति ।।

आह यदि मुक्त ऊर्ध्वगतिस्वभावो लोकान्तादूर्ध्वमपि कस्मान्नो-त्पततीत्यत्रोच्यते—

धर्मास्तिकायाभावात् ॥ ८ ॥

गत्युपग्रहकारणभूतो धर्मास्तिकायो नोपर्यस्तीत्यलोके गमनाभाव। तदभावे च लोकालोकविभागाभाव प्रसज्यते ॥

आह अमी परिनिर्वृता गतिजात्यादिभेदकारणाभावादतीतभेदव्यवहारा एवेत्यस्ति कथञ्चिद्भेदोऽपि। कुत—

क्षेत्रकालगतीलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसंख्याल्पबहुत्वतः साध्याः ॥ ९ ॥

क्षेत्रादिभिर्द्वादशभिरनुयोगै. सिद्धा साध्या विकल्पा इत्यर्थ. प्रत्युत्पन्नभूतानुग्रहनयद्वयविवक्षावशात्।

इति—शुभम्

# Sarvartha Siddhi

## *Abridgment*

## NOTES

### *Chapter I*

Page 1

मोक्ष...लब्धये—To Him, who has shown the path of Liberation, who has destroyed the mountains of Karmas and who has known the entire realities, I bow down in order to acquire these qualities.

भव्य—one who has the ability to acquire right belief, right knowledge and right conduct

उपलिप्सु—desiring to acquire, विविक्ते—pure and solitary

परमरम्ये—charming. भव्यसत्वविश्राम—shelter for the bhavya jivas.

प्रत्यासन्ननिष्ठ—whose Liberation is in the near future.
प्रज्ञावान—wise, मूर्त्तमिव मोक्षमार्गमवाग्विसर्ग—his attractive personality alone, without any speech on his part, indicated the path to Moksha

परहित प्रतिपादन—preaching beneficial things to others. आर्य निषेव्यम्—worthy of worship by the good people. निर्ग्रन्थ—without any internal and external possessions.

उपसद्य—having approached; सविनयं—with respect. परिपृच्छति स्म—asked; अव्याबाधसुखम्–undisturbed spiritual bliss; आत्यन्तिकम्—eternal; अवस्थान्तरम्–a condition different from and beyond worldly existence

विशेष...अवस्तुत्वात्—by not being a substance with some special characteristics, खरविषाणवत्—like the horn of an ass. उच्छेद—destruction.

Page 2

Sutra I Right Belief ( Perception ), Right knowledge and Right Conduct form the way to Moksha

सम्यग्दर्शन—Samyagdarshana-Right view point

सम्यग्ज्ञान, Samyag jnana—Right knowledge; सम्यक्चारित्र, Samyakcharitra—Right Conduct; मोक्षमार्ग-Moksha margha, the Way to Moksha or Liberation

अनध्यवसाय...निवृत्यर्थ-in order to remove ignorance, doubt and delusion.

Page 3.

Sutra 2 Belief in the realities as they are, is called Right Belief.

तत्त्वार्थ—Tattvartha, realities, as they are, श्रद्धा—Sraddha, Belief; सराग–Saraga, with attachment, वीतराग-

Vitaraga, free from attachment, प्रशम—Prashama, subduing of attachment and aversion; संवेग-Samvega, fear for mundane existence consisting of five parivartanas, modifications due to substance, place, time, thought and birth

अनुकम्पा—Anukampa, compassion for all living beings, moving and non-moving.

आस्तिक्य—Astikya, belief in the true nature of the ( tattvas ) realities as they are.

आत्मविशुद्धि—Atmavishuddhi, purity of the soul

Sutra 3 That ( Right Belief ) is produced by itself without any external help or through the instruction of others.

निसर्ग—Nisarga, intuition. by itself without any external help अधिगम,—Adhigama, through the instruction of others or by reading the scriptures.

अनवबुद्धतत्त्वस्य—He who has not understood the tattvas

दर्शनमोह—Darshanamoha, Karmas which obscure right belief or true view point.

उपशम—Upashama, subsidence. क्षय—Kshaya, destruction. क्षयोपशम-Kshayopasama, partial destruction

and subsidence

Page 4

Sutra 4 Jiva, Ajiva, Asrava, Bandha, Samvara, Nirjara and Moksha are the tattvas.

जीव—Jiva, soul, अजीव—Ajiva, non-soul; आस्रव-Asrava the way by which good and bad karmas enter into the soul.

बन्ध—Bandha, bondage of the soul by the Karmas; संवर—Samvara, stopping of the influx of Karmas; निर्जरा—Nirjara, partial separation of the Karmas from the soul, मोक्ष—Moksha, total separation of all Karmas from the soul

कृत्स्नकर्मविप्रयोग—Separation of all Karmas for ever.

Sutra 5 Name, Installation, Substance and Modification ate aspects

नाम—Nama, giving a name to a person irrespective of his personality, strength, qualities e g to call a man Gajaraj, though he is not the king of elephants.

स्थापना—Sthapana, installation of a statue, picture or any form of representation of a person or thing e. g an image or a picture of a deity.

द्रव्य—Dravya, to call a man by the name of office

he held in the past or may hold in the future e. g to call an Ex-Minister, as Minister or an heir-apparent as King a person who knows the King as King, or the body of a King as King

भाव—Bhava, to call a person with reference to his present condition e g to call a ruling king as king

संज्ञाकर्म—Samjakarma, naming a thing or person

न्यास—Nyasa or aspect from which a thing can be considered

Sutra 6 Knowledge from ( tuition ) adhigama, is derived through pramanas and nayas

प्रमाण-Pramana, valid and full knowledge of things

नय—Naya, a standpoint by which we get partial knowledge of a thing in some particular aspect

नामादि.. अधिगम्यते—The real natures of Jiva etc recognised through nama etc are known through pramanas and nayas

तत्र प्रमाणम्...भवति—Pramana is of two kinds, svartha and parartha. Svartha pramana is without sruta or description in words, Otherwise Matijnana ( knowledge through the senses ), Avadhijnana (clairvoyant knowledge), Manah paryaya jnana (know

ledge of other's thoughts pertaining to matter ) and Kevala jnana ( omniscient knowledge ) are forms of svartha pramana. Again Srutam is svartha as well as parartha

ज्ञान...नया—Svartha is of the form of knowledge Paratha is of the form of words.

न्यास—Nyasas are the varieties of sruta pramana.

नय...योनित्वात्—The cause for the origin of varieties in Nayas is Pramana.

सकल आदेश प्रमाण आधीन—Full delineation of any thing is the subject-matter of Pramana

विकल-आदेश नय आधीन—Partial delineation of any thing is the subject-matter of Naya

द्रव्यार्थिक नय—Dravyarthika Naya The purpose of this Naya is only to know the concrete substance

पर्यायार्थिक नय– Paryayarthika Naya The purpose of the Naya is to know only the changes and modifications in the subtance

Sutra 7 ( Knowledge is also obtained through ) Nirdesa, Svamitva, Sadhana, Adhikarana, Sthiti, and Vidhana

निर्देश—Nirdesha is the naming of a substance

स्वामित्वम्—Svamitvam, is its ownership.

साधनं—Sadhanam, is the cause of its origin

अधिकरणम्—Adhikaranam, is the basis of the substance.

स्थिति—Sthiti, is its duration.

विधानम्—Vidhanam, its different kinds.

Sutra 8. (The seven tattvas etc. can also be known through) Sat, Samkhya, Kshetra, Sparshana, Kala, Antara, Bhava and Alpa-bahutva.

सत—Sat, existence; संख्या—Samkhya, number.

क्षेत्र—Kshetra, the place where the thing is found at present

स्पर्शन—Sparshana, extent of space touched by it in the past, present and future.

काल—Kala, time; अंतर—Antara, interval of time.

भाव—Bhava, the quality of the object, अल्पबहुत्त्व—Alpa-bahutva, little or more.

Page 6

Sutra 9 Mati, Sruta, Avadhi, Manah-paryaya and kevala are the kinds of knowledge

इन्द्रियै . मति—Knowledge of things through the five (indriyas) senses and the mind, according to one's own capacity is called Mati jnana

तदावरण. श्रुतम्—What is heard and understood about the things, due to the partial destruction and subsidence of Srutajnana-avaraniya Karmas, is called Sruta jnana.

अवाग्...अवधि. Direct knowledge of material things within certain limits of place, time etc is called Avadhi jnana.

परकीय...मनपर्ययः—Knowledge of the ideas about material things in the minds of others is said to be Manah paryaya jnana

बाह्येन...वा—Direct knowledge of things obtained by the soul of a person as the result of his external and internal austerities is called kevala jnana. This knowledge is without the help of anything else and it knows all the substances, in all their modifications of the past, present and future

केषाञ्चित् ज्ञानम् अभिमतम्—some regard knowledge to be pramana

केषाञ्चित् सन्निकर्ष.—some believe contact with things through the senses to be pramana.

केषाञ्चित् इन्द्रियम्—some regard indriya to be pramana.

Sutra 10. They ( five kinds of knowledge ) are two pramanas. तद्—Tad, They, the five kinds of knowledge mentioned in the previous sutra.

प्रमाणे—Pramane, are the two pramanas, i e Pratyaksha and Paroksha

Page 7.

प्रमिणोति···प्रमाणम्—That which knows the things correctly and by which things are known correctly is called Pramana

Page 8

Sutra 11 The first two (are) indirect pramanas.

तद्-उभयम् अपि परोक्षम्—They Mati and Sruta are paroksha pramanas.

As Mati jnana is dependent on the five indriyas and mind and Sruta jnana is dependent on the instruction of external agencies, both of them are called indirect pramanas.

अत···अन्तर्भाव—Upamana and Agama pramanas etc. come under paroksha pramana.

Sutra 12. The remaining (three kinds of knowledge) are pratyaksha

प्रत्यक्ष—Pratyaksha, direct knowledge by the soul without any external help.

Page 10

Sutra 13 Mati, Smriti, Sanja, Chinta, Abhinibodha are synonymous terms

मनन मति—Knowledge of the things existing at present through mind and the five senses is called Mati.

स्मरण स्मृति—Remembrance of the things previously known is Smriti.

संज्ञानं सज्ञा—Joint knowledge produced by pratyaksha and smarna e. g. This is the Devadatta whom I had seen before five years in the city of Benares. Gavaya is similar in appearance to cow but the buffalo is not similar to cow

चिन्तन चिन्ता—Knowledge of two things connected with each other as smoke and fire. There can be no smoke without the existence of fire

अभिनिबोधनम् अभिनिबोध—Reasoning by inference There must be fire here, because there is smoke

Sutra 14 That (Mati) is due to indriyas and mind.

इन्द्रिय—Indriyas, sense organs of touch, taste, smell, sight and hearing अनिन्द्रिय—Anindriya, mind.

Indriya is so called because it is the linga or sign of Indra or soul No-indriya, manah and antakaranam

also refer to mind.

Page 11

Sutra 15. Avagraha, Iha, Avaya and Dharana ( are also kinds of mati jnana )

अवग्रह—Avagraha, The first knowledge of a thing through one or more of the senses and mind. e. g. Seeing a thing to be white.

ईहा—Iha, A little more advanced knowledge than avagraha e g. That white thing must be a crane or a flag.

आवाय—Avaya, Still more knowledge about the thing seen e g As the white object flies about in the air, it must be a crane and not a flag.

धारणा—Dharana, Not to forget what is known. e g This is the crane which I saw previously.

Page 12.

Sutra 16. Bahu, Bahu-vidha, Kshipra, Anisrita, Anukta, Dhruva and their opposites ( These are the twelve conditions in which the substances may be found )

बहु—Bahu, many in number or much in quantity; e. g. many cows of different shapes and colours; a huge heap of grains.

बहुविध—Bahuvidha, of many kinds. Different kinds

of quadrupeds such as cows, buffaloes, horses, asses etc.

क्षिप्र—Kshipra, quick, moving rapidly like a river in flood or a mail train running at full speed.

अनिःसृत—Anisrita, hidden, like an elephant hidden in water.

अनुक्त—Anukta, not described but known only by inference. e g. A person sits down at a place where water is given, the waterman infers that the person wants to drink water.

ध्रुव—Dhruva, lasting and fixed as a mountain.

एक—Eka, one in number, a single cow

एकविध-Ekavidha, only one kind, a group of cows.

अक्षिप्र—Akshipra, slow as a snail moving slowly.

नि सृत—Nisrita, exposed, elephant coming out of water.

उक्त—Ukta, described, as this image is made of silver

अध्रुव—Adhruva, transcient, as a flash of lightning.

Sutra 17. (These are) of determinable objects

चक्षुरादिविषयोऽर्थ.—That which can be perceived through the organs of eye etc is called artha

Sutra 18. There is avagraha only of Vyanjana

व्यञ्जन—Vyanjana or an indeterminable sense object about which we know very little.

Sutra 19. Knowledge of things which cannot be apparently known (vyanjana avagraha) is not possible through eye and mind.

अप्राप्यकारित्वात्—Knowing without touching.

अविदिक्कम्—Standing in the same direction

Sutra 20. Scriptural knowledge is preceded by sensitive knowledge It is of two kinds. One of which has many kinds and the other has twelve kinds.

The two kinds are Anga-bahya and Anga pravishta. Anga-bahya means 'outside the Angas' and Anga-pravishta means included in the Angas.

क्षीरार्णवजलं...इव—as the water of the milk ocean is kept in a pot.

प्रत्यक्ष...केवलम्—Pratyaksha (direct knowledge) is of two kinds, Desha-pratyaksha and Sakala-pratyaksha. Desha-pratyaksha consists of Avadhi and Manah-paryaya. Sarva-pratyaksha is kevala Jnana

Sutra 21. The celestial and hellish beings have clairvoyant knowledge from birth

भवप्रत्यय—Bhavapratyaya, caused by, due to, or on account of birth

यथा पतत्रिणो .इत्युच्यते-As birds fly in the air, without being taught, because of their birth as birds, so also the Devas and the Narakas (celestial and hellish beings possess Avadhi Jnana, because of their birth only,

though they might not have observed or practised any vows or rituals

Sutra 22 The others (developed human and sub-human beings with mind) have clairvoyant knowledge caused by the partial destruction and partial subsidence of clairvoyant-knowledge-obscuring Karmas It is of six varieties

Page 17.

अनुगामी—Anugami, clairvoyant knowledge accompanying the soul.

अननुगामी—Ananugami, non-accompanying.

वर्द्धमान—Vardhamana, Increasing

हीयमान—Hiyamana, Decreasing.

अवस्थित—Avasthita, Steadfast.

अनवस्थित—Anavasthita, Changeable.

Sutra 23 Manah-paryaya is of two kinds, Rijumati and Vipulamati

ऋजुमति—Rijumati, simple direct knowledge of what a man is thinking now about material things

विपुलमति—Vipulamati, complex direct knowledge of material things, a man is thinking about now, thought of before, or will think of in the future

वीर्यान्तराय—Viryantaraya, karma which obstructs the exercise of one's power or capacity.

मनःपर्ययज्ञानावरण—Manah - paryaya - Jnanavarana, karma which hides the telepathic knowledge of things in other's minds.

आङ्गोपाङ्गनाम—Angopanganama, Karma which determines the limbs and minor limbs of a body.

Page 18

Sutra 24 Their special characteristics differ as regards their purity and infalliability

Vipulamati is purer than Rijumati. Vipulamati continues to exist in the soul till it attains omniscience; but Rijumati is not stationary

उपशान्तकषायस्य—Upashanta kashayasya, A soul in the eleventh Gunasthana (the stage in which the passions are subdued) may fall down from self-restraint

क्षीणकषायस्य—Kshinakashyasya, A soul in twelfth Gunasthana (the stage in which the passions are destroyed) does not fall from the summit of selfrestraint.

Sutra 25 Avadhi and Manah-paryaya differ as regards purity, place, possessor and subject.

विशुद्धि—Vishuddhi, purity; क्षेत्र—Kshetra, the extent of place which the knowledge can know; स्वामि Svami, the owner or possessor of knowledge; विषय—Vishaya, the knowable objects

Sutra 26 The subject matter of Mati and Sruta is

the dravyas (substances) not in all their modifications

The dravyas are six in number eg. जीव—Jiva, soul; धर्म—Dharma, medium of motion; अधर्म—Adharma, medium of rest, आकाश—Akasha, space; काल—Kala, Time, and पुद्गल–Pudgala, matter. Through Mati Jnana and Sruta Jnana we can only know some of the modifications of the six substances

Page 19.

Sutra 27. The subject matter of Avadhi Jnana is matter (not in all its modifications)

Sutra 28. An infinitesimal part of that ( which is known by the highest visual knowledge ) is the subject matter of manahparyaya.

Sutra 29 All the substances in all their modifications form the subject matter of Kevala Jnana (omniscient knowledge).

Page 20.

Sutra 30. Beginning from one there can be found in a soul, at a time, upto four kinds of knowledge.

All the five kinds of knowledge cannot be found in a soul A soul may have at one and the same time four kinks of knowledge, Mati, Sruta, Avadhi and Manah paryaya If a soul has three kinds of knowledge, they will be Mati, Sruta and Avadhi or Mati, Sruta and

Manah-paryaya. If a soul has two kinds of knowledge, they will be Mati and Sruta. If a soul has only one kind of knowledge, it must be kevala Jnana or omniscience.

Sutra 31. Mati, Sruta and Avadhi have wrong knowledge also. Mati, Sruta and Avadhi may be either right or wrong.

मिथ्यादर्शन—Mithyadarshan, wrong belief, wrong view point. A person with wrong belief will have only wrong kinds of Mati, Sruta and Avadhi called respectively Kumati, Kusruta and Vibangha-avadhi.

सरजस्क-कटुक-आलाबु-गत-दुग्धवत्—as milk placed in the hollow of a bitter gourd becomes bitter in taste.

Page 21

Sutra 32. The soul with wrong knowledge, from lack of discrimination of the real and the unreal, knows things according to its whims like a mad man

Sutra 33 Naigama, Samgraha, Vyavahara, Rijusutra, Shabda, Samabhirudha, and Evambhuta are the Nayas

The particular standpoint from which a particular aspect of a thing is studied is called a Naya.

द्रव्यार्थिक नय—Dravyarthika Naya, which deals with the substances or reality

- पर्यायार्थिक नय—Paryayarthika Naya, which deals with the paryayas or particular aspects or modifications of substances.

1 नैगम नय—Naigama Naya takes into consideration some aspect of a thing and speaks of it as non-distinguished from the whole. A person is seen taking water etc. into the kitchen, you ask him, "What are you doing" ? He replies, "I am cooking food,' although he is not actually cooking but is only preparing to cook

2 संग्रह-नय—Samgraha Naya speaks of things according to classes or groups. e. g Dravyas consisting of Jiva, Pudgala, Dharma, Adharma etc. Trees consisting of various kinds such as mango, jack tamarind, banyan, margosa etc

3. व्यवहार नय—Vyavahara Naya is the pratical standpoint which studies in a regular way the objects grouped in a class under the Samgraha Naya e g studying dravyas under its several heads, as Jiva and ajiva; studying Jiva under the heads celestial, human, subhuman and hellish; studying Ajiva under Pudgala, Dharma, Adharma, Akash and Kala The Vyavahara Naya supplies the principle of division, the fundamentum divisionis, as it is called in European Logic and finds out varieties in what is spoken of as a class or group by the Samgraha.

The above mentioned three Nayas are said to be Dravyarthika Nayas.

ऋजुसूत्र नय—Riju Sutra Naya is the method by which a thing as it exists at present is considered, without any reference to its past or future e. g. We see a person sitting on the roadside and we ask him, "To which place do you belong," "I am here alone", he replies. This answer is according to Riju Sutra Naya.

5. शब्द नय-Shabda Naya, consists in using a word in a conventional sense, and not according to its gender, number, case or mood. e g. To speak of Pushya ( masculine gender ) as Taraka ( feminine gender ) and Nakshatra ( neuter gender ). To call Jalam ( singular number ) by Ap ( plural number ) etc

6. समभिरूढ नय—Samabhirudha Naya, lays stress on the special meaning of a particular term which is interpreted in several ways. e. g. Indra ( one who is prosperous and rich), Shakra ( one who is powerful ) and Purandara ( destroyer of Pura or the city of the enemies ) refer to Sachipati ( the husband of Sachi ) and the lord of the devas

7. एवंभूत नय—Evambhuta Naya recognises an object denoted by a word, only when the object is in actual possession of the quality meant by the term. e.g. To call Indra by the term Shakra only when he is doing any action associated with power.

which can be enjoyed more than once ) is acquired

वीर्यान्तरायस्य'' अनन्तवीर्यम्—By the complete destruction of Viryantaraya karmas, infinite power is gained.

पूर्वोक्तानां तथा—By the complete destruction of the seven mohaniya karmic Prakritis mentioned previously, Samyak Darshna is produced and by the destruction of charitra mohaniya karmas pure charitra is acquired.

Page 27.

Sutra 5. The eighteen kinds of kshayopashamika bhava are, four kinds of right knowledge, three kinds of wrong knowledge, three kinds of perception, five kinds of attainments, right belief, right conduct and restraint with non-restraint

Sutra 6 The twenty one kinds of audayika bhava ( that which arises from the operation of karmas are ) four conditions of existence, four passions, three sexes, wrong belief, ignorance, non-control of desires, non-liberation and six kinds of thought-colours.

Four conditions of existence, are celestial, human, sub-human, and hellish Four passions are anger, pride, deceit and greed. Three sexes are masculine, feminine and neuter Six kinds of thought colours are black, blue, grey, yellow, pink and white.

The term Leshya is used in a technical sense in the Jaina metaphysics to illustrate the several degrees of

